# श्रीहनुमत्स्तोत्रशतकम्

रचयिता

वीरेन्द्रदत्त तिवारी

शिक्षाधिकारी (संस्कृत)

केन्द्रीय विद्यालय संगठन

नई दिल्ली

प्रकाशक

र्य बुक डिपो

ाईवाला, करौल बाग

नई दिल्ली

1974

# पद्मश्री राष्ट्रकवि पं० सोहनलाल द्विवेदी के आशीर्वचन

कविवर श्री वीरेन्द्रदत्त तिवारी केन्द्रीय विद्यालय के प्राचार्य एवं संस्कृत-वाङ्मय के आचार्य हैं। संस्कृतभाषा तथा साहित्य का उन्होंने गहन अध्ययन किया है और अनेक रचनाएँ भी लिखी हैं जिनकी भूरि-भूरि प्रशंसा हुई है।

प्रचुर प्रतिभासंपन्न कवि ने 'पँचमढ़ी प्राचार्य-सम्मेलन पञ्चाशिका' शिखरिणी के ५२ श्लोकों में ललित रचना की है, रामचरितमानस के अरण्यकांड एवं किष्किन्धाकांड को भी इन्द्रवज्रा छन्द में सफलता से अवतरित किया है तथा जयद्रथवध के प्रथम दो सर्गों का भी वसन्ततिलका छन्द में उत्कृष्ट अनुवाद किया हैं।

श्रीहनुमत्स्तोत्रशतकम् उसी कवि की बहुचर्चित रचना है। जिस प्रकार मैं उससे प्रभावित एवं रसमग्न हुआ हूँ, मुझे विश्वास है, रसज्ञ पाठकों को भी यह रसमग्न करेगी।

भारत-भारती के प्रांगण में सुरभारती की इस अभिनव कृति का मैं सादर स्वागत करता हूँ और कवि का हृदय से अभिनन्दन भी।

सोहनलाल द्विवेदी
एम० ए०, एल-एल० बी०
पो० बिन्दकी (फतेहपुर) उ० प्र०



२४-३-७१

## श्री रामप्रकाश वासिष्ठ, शिक्षाधिकारी (हिन्दी एवं संस्कृत)
## केन्द्रीय विद्यालय संगठन, नेहरू भवन, नई दिल्ली
## की शुभाशंसा

'श्री हनुमत्स्तोत्रशतकम्' श्री वीरेन्द्रदत्त तिवारी की मौलिक कृति है। विषय का चयन उनके स्वयं के व्यक्तित्व को प्रतिध्वनित करता है। संस्कृत भक्त तिवारी जी ने रामभक्त श्री हनुमान जी के जीवन का प्रशस्तिगाथा अनूठी भक्तिरससिक्त शैली में लिखी है। काव्य-चमत्कार लाने के लिए उन्होंने यमक, उपमा, रूपक, उत्प्रेक्षा, अनुप्रास, अतिशयोक्ति आदि अलंकारों का बड़ा सुन्दर एवं प्रभावी प्रयोग किया है जिससे रचना में चार चांद लग गए हैं। सबसे बड़ी विशेषता तो यह है कि सन्धि एवं समास योजना को सीमित रखकर उन्होंने अपने काव्य को अत्यन्त सरल एवं सहजग्राही बना दिया है। मुझे अनेक अवसरों पर उनकी काव्यरचनाओं को सुनने का सौभाग्य प्राप्त हुआ है। वे संस्कृत साहित्य की समृद्धि, संस्कृत भाषा-प्रचार एवं छात्रों में काव्य के माध्यम से सद्गुणों के विकास के लिए निरन्तर प्रयत्नशील हैं।

आशा है कि माध्यमिक स्तर के भी छात्रों के लिए यह शतक प्रेरणादायक एवं उपयोगी सिद्ध होगा। मैं श्री तिवारी जी को उनके स्तुत्य प्रयत्न के लिए साधुवाद देता हूँ और संस्कृत भाषा एवं साहित्य के पुनरुत्थान में उनसे अनेक मौलिक रचनाओं की आशा करता हूँ।

**रामप्रकाश वासिष्ठ**
शिक्षाधिकारी (हिन्दी एवं संस्कृत)
केन्द्रीय विद्यालय संगठन
नई दिल्ली

## समर्पणम्

परमेश्वरदीनाय शुक्लाय सुयशस्विने ।
परमादरणीयाय महाभागाय वाग्मिने ॥ १ ॥
डाक्टरोपाधियुक्ताय शिक्षामंत्रालयार्चिषे ।
विद्वद्वराय धन्याय वाचस्पतिनिभाय च ॥ २ ॥
अध्यक्षाय च केन्द्रीयशिक्षापरिषदः सते ।
केन्द्रीयपाठशालानां संस्थापकहितैषिणे ॥ ३ ॥
कला - विज्ञान - संगीत - सत्साहित्य - मनीषिणे ।
विद्या - वैभव - संपन्न - संरक्षक - महात्मने ॥ ४ ॥
संगठनस्तम्भरूपाय प्रशासकोत्तमाय च ।
अर्प्यते सादरं ग्रन्थो हनुमत्स्तोत्रसंज्ञकः ॥ ५ ॥

# मंगलाचरणम्

वाणीविनायकौ ध्यात्वा स्मृत्वा च रघुनायकम् ।
हनुमन्तं महासन्तं रामपादाब्जषट्पदम् ॥ १ ॥
चाञ्चल्यादथवा धार्ष्ट्यात् पूर्वकर्मवशादपि ।
स्तोत्रं लिखति वीरेन्द्रो रामकिंकरकिंकरः ॥ २ ॥
विद्वांसः क्षन्तुमर्हन्ति नीरक्षीरविवेकिनः ।
दोषान् शब्दार्थसम्बद्धान् शुद्धाशुद्धनिरूपिणः ॥ ३ ॥
स्वान्तःसुखाय रचिताः केवलं शतसंख्यकाः ।
श्लोकाः शिखरिणीवृत्ताः शोकमोहनिवारकाः ४ ॥
श्रीमत्सोहनलालेन द्विवेदिना यशस्विना ।
पद्मश्रीभूषितेनापि कृपातो भूमिकांकिता ॥ ५ ॥
सुहृद्वरेण विदुषा श्रीजुग्गीलालशर्मणा ।
आचार्येण प्रदत्तो मे सहयोगो निरन्तरम् ॥ ६ ॥
वृजेन्द्रेण कनिष्ठेन पुत्रेणापि श्रमः कृतः ।
आयुष्मता यथार्थेन श्लोकानुलेखकारिणा ॥ ७ ॥
श्रीमता मानसिंहेन सानुकम्पं प्रकाशितम् ।
आर्यपुस्तकभण्डारस्वामिना मुद्रणं कृतम् ॥ ८ ॥
तदर्थं धन्यवादा मे निस्सरन्ति त्वनेकशः ।
न तावद् वचसा शक्यं कृतज्ञताप्रकाशनम् ॥ ९ ॥

सम्मार्ज्य मानसादर्शं गुरुपादाब्जरेणुभिः ।
श्रीहनुमद्यशोगाथा सरलदिव्यभाषया ॥१०॥
वर्ण्यते चारुचन्द्राभा भक्तानन्दप्रदायिनी ।
मनस्तोषाय विदुषां छात्राणां हितकारिणी ॥११॥
रामायणादिग्रन्थेभ्यः सारमादाय सुन्दरम् ।
पुस्तिका लिख्यते चैषा हनुमत्स्तोत्रसंज्ञिका ॥१२॥
क्व वीरो वायुपुत्रोऽसौ विज्ञः क्वायं मन्दमतिर्जनः ।
आरुरुक्षुर्हि चापल्यात् पंगुरस्मि हिमालयम् ॥१३॥
मूको वाञ्छामि वक्तुं च बधिरः श्रोतुमना अपि ।
अकिंचनः कांचनाशश्च प्रेप्सुर्मृगमरीचिकाम् ॥१४॥

तथापि हरिकृपाकांक्षी दुःसाहसं करोमि वै ।
आधिव्याधिजराग्रस्तो मग्नः संसारकर्दमे ॥१५॥
वाल्मीकिं व्यासभासौ च कालिदासं महाकविम् ।
महात्मतुलसीदासं प्रणमामि मुहुर्मुहुः ॥१६॥
एभिरन्यैश्च धन्यैश्च सूरिभिः सुयशस्विभिः ।
काव्यार्चिर्द्योतिते मार्गे कथमपि गन्तुमुत्सहे ॥१७॥
प्रमादादथवाऽज्ञानात् यत्कुत्रापि स्खलनं भवेत् ।
प्राज्ञनिर्दिष्टसंशोधम् विधास्ये मुद्रणान्तरे ॥१८॥
परिष्कारपरामर्शं समालोचकसम्मतिम् ।
सधन्यवादबहुलं स्वीकरिष्याम्यसंशयम् ॥१९॥
गुरूणामाशिषः सर्वाः श्रीमतां विदुषां सताम् ।
पूज्याभिवन्दनीयानाम् प्रार्थयामि निरन्तरम् ॥२०॥

॥ श्रीगणेशाय नमो नमः ॥

# श्रीहनुमत्स्तोत्रशतकम्

यदा बाल्ये सूर्यः फलमिव सलीलं निगलितः
समस्तः संसारस्तिमिरपटलेनावृत इव ।
तदा देवेन्द्राद्यैर्विबुधमुनिभिः प्रार्थित ऋजु-
स्वभावादुन्मुक्तः किल गगनमार्गे दिनमणिः ॥१॥

बलोत्कर्षाद्यावद् ऋषिमुनिगणानां व्रतजुषां
समाधिर्भग्नोऽभूदनवरतचापल्यकरणात् ।
प्रशप्तस्त्वं यायात् किल तव बलं विस्मृतिपथ-
महो धन्यैश्वर्यं प्रकटयसि सदा बोधितबलः ॥२॥

ऋषीणां सान्निध्ये समधिगतमिदं सूत्रममलम्
परिव्याप्तो भूते कणकणमये रामभगवान् ।
तदाप्रारभ्यैव स्थलनभउदन्वेषणपरः
अधावीत् राम त्वं नयनपथमायास्यसि कदा ॥३॥

अभीष्टस्ते रामो दशरथसुतो लक्ष्मणप्रियः
ससीतो धर्मिष्ठः शशिवरनिभश्रीरवनिपः ।
धनुष्पाणिः शूरः सजलजलदश्यामवदनः
अजेयो दुर्धर्षो रघुकुलमणिर्दुष्टदमनः ॥४॥

यदा किष्किन्धायां नियतिहृतसीताविरहितः
अयासीच्छ्रीरामस्त्वनुजवरसौमित्रसहितः ।
तदाऽऽराध्यस्यैवं सुकृतफलतो दर्शनमभूत्
प्रणामः साष्टांगः सपदि प्रणिपत्यैव विहितः ॥५॥

विहायैवंवेषं कपिशरुचिरं ब्राह्मणमुनेः
स्वरूपं चास्थायाशरणशरणं प्राप शरणम् ।
परिष्वक्तो गाढं किन परमहर्षेण प्रभुणा
प्रभोः साक्षात्कारः परमप्रियभक्तस्य जयति ॥६॥

प्रभोः कार्यं कार्यं सकलविधिभिः प्राणपणतः
प्रणस्तेऽभृद्भीष्मो रणकुशलनीतिप्रणयिनः ।
सतां वै त्राणार्थं खलदमननाशार्थमवनौ
त्वदीयः संसारे त्वभवदवतारः प्रभुनिभः ॥७॥

अहो ते वात्सल्यं परमप्रियभक्तेषु नितराम्
सदा मानं तेषां विविधविधिभिर्वै वितनुषे ।
नृपं भीतं त्रात्वा कपिकटकचक्रादकवरं
भवद्भक्तो लेभे सुकवितुलसी मानममलम् ॥८॥

तवोत्कृष्टं नामस्मरणमपि वीरत्वजनकम्
प्रमादालस्येर्ष्याभयकलुषशंकापहरणम् ।
प्रदीपो नैराश्ये भवभयरुजो नाशकरणम्
न तावल्लोकेऽस्मिन् तव बलवतस्तुल्यप्रतिमा ॥९॥

अखण्डं वीरत्वं सुगमगतिरुर्व्यां पयसि खे
अगाधं पाण्डित्यं सकलवरशास्त्रेष्वविकलम् ।
अहो शस्त्रे शास्त्रे समधिकतरं ते कुशलता

अपूर्वं व्यक्तित्वं जगति महिमामण्डितमिदम् ॥१०॥

शिलाखण्डः क्षिप्तो लघुमम करान् मज्जति जले
त्वदीयं प्रक्षिप्तं तरति जलधौ शैलशकलम् ।
त्वयोक्तं वै लीनं प्रभुकरविहीनं भवजले
प्रतापात्ते नाम्ना पयसि तरति प्रस्तरचयः ।।११।।

समन्वेष्टुं सीतां प्रविशसि यदा रावणगृहे
महिष्यः सुन्दर्यो नयनपथमायान्ति सहसा ।
कुदृष्ट्या नापश्यः शयनवशनग्ना अपि तदा
परस्त्री वै हेया शुभमभिलषद्भिः सुपुरुषैः ।।१२।।

यदा ते लाङ्गूलं कुमतिवशलंकाधिपतिना
सुसिक्तं तैलेनावृतमकृत वस्त्रैरनलसात् ।
कृता प्लावं प्लावं कनकमयलंका त्वनलसात्
न ते कोपज्वालां शमयितुमलं कोऽपि जगति ।।१३।।

तदा बन्दीभूताः शनिप्रभृतिलोकाधिपतयः
त्वया कारामुक्ताश्चिरसमयतो बन्धनयुताः ।
न सत्प्राणी लोके न समुपकृतो यश्च भवता
विभूतिर्भावत्की परहितपरा विश्वविजयिन् ।।१४।।

यदाऽहार्षीत् रामं कुटिलमतितो लक्ष्मणमिह
शयानौ निद्रालू शिविरकुटजाद् रावणसुहृत् ।
तदा त्वं पातालं द्रुततरमुपेत्यैव मतिमान्
अरीन् हत्वा युक्त्या सकुशलमनैषीः रघुमणी ।।१५।।

न ते मुष्टिं सोढुं प्रभवति भटः कोऽपि समरे
गदाघातात् सद्यः यमसदनमेति क्षणमिव ।
पदाघातेनैवं धरणिशयनं दीर्घसमयं
तथा हुंकारेणोपरत इव संज्ञां न लभते ।।१६।।

नृसिंहाविर्भावं तिरयसि नखानां प्रहरणैः
सुलाङ्गूलस्यैन्द्रं द्विरदकरमास्फालनविधौ ।
त्रिनेत्राक्षिज्वालां तव समरकोपाग्निप्रसरः
गदायुद्धे जाते प्रबलबलरामं हलधरम् ।।१७।।
मदोन्मत्तो भीमो विहरणपरः प्राप विजने
विहस्योचे मह्यं सपदि सुपथं देहि सघृणः ।
त्वयोक्तं मार्गस्थश्चलितुमसमर्थोऽस्मि पलितः
अपाकर्तुं भीमस्तृणमपि न शक्तः प्रणतवान् ।।१८।।
गरिम्णो भाराद् वै तव समरमध्येऽर्जुनरथः
मनाक् कर्णस्यापि प्रखरतरबाणैर्न चलितः ।
सदा धर्मे रक्तिः समभवदपूर्वा क्षितितले
प्रतापात् सत्कीर्त्या अमरवरकायो विजयसे ।।१९।।
अपारस्ते लोके सकलपुरुषैर्गेयमहिमा
क्वचिद् गुप्तः साक्षात्क्वचिदपि च भक्तेषु सदयः ।
महात्मानं श्रेष्ठं सुकवितुलसीदासमदिशः
महाकाव्यं कान्तं किल रचयितुं रामचरितम् ।।२०।।
प्रसादात्ते नूनं जगति तुलसी वै कविवरः
ससीताश्रीरामं सचरमचरं पश्यति सदा ।
धनुर्धारी पार्थोऽलभत विजयं दिक्षु विमलम्
मुमूर्षुः सौमित्रिः रणभुवि नवं जीवनवरम् ।।२१।।
न ताक्ष्र्यस्ते वेगं परममनुकर्तुं प्रभवति
कथा का वा नान्दीहरिगजमयूरादिजविनाम् ।
तडिद्वेगात्तीव्रः पवनवेगादतिशयः
मनोवेगाच्छीघ्रस्तरलसलिलात् पुष्पकजवात् ।।२२।।

यदा चूर्णीभूता निशितदशनैः रत्नगुलिकाः
महाराज्ञीसीताकरकमलदत्ता मणिमयाः ।
तदा सभ्यैः सर्वैरुपहसितकार्यो नु भवता
विदार्यं स्वं वक्षः प्रभुयुगलरूपं प्रकटितम् ।।२३।।

यदाऽहीनां माता वदनमतिविस्तार्य सुरसा
रुरोधाध्वानं ते निजबलमदान्धा निशिचरी ।
तदा रूपं सूक्ष्मं किल समवलम्ब्यैव सहसा
विशालास्यायास्त्वं वदनविवराद् निःसृत इव ।।२४।।

अहोनिर्भीकत्वं कुमतिवशिनं रावणनृपं
भवान् वै लंकायां हितमुपदिदेश श्रुतिपथम् ।।
प्रशंसन् श्रीरामं पुनरभिशपन् रावणकृतम् ।
विपन्नो लंकेशः शिरसि न दधौ ते हितवचः ।।२५।।

विजेतेर्ष्याकामप्रभृतिनृरिपूणां समभवः ।
सुदुर्धर्षाणां त्वं किल जगति षण्णां सुधिषणः ।।
हितैषी भक्तानामृषिमुनिगणानामभिमतः ।
महायोगी ख्यातःपरमविभवाढ्यः सुकृतधीः ।।२६।।

नभोमार्गे धावन् स्वकरधृतसंजीवनगिरिः
समायातो भूमौ भरतशरविद्धोऽपि भगवन् ।।
हताशः संजातः क्षणमपि न रामस्मरणतः ।
विलम्बं नाकार्षीद्द्विगुणितजवो लक्ष्यगमने ।।२७।।

अहो रामे रागो भवति सुकथा रामविषया ।
यदा स्थाने स्थाने प्रवहति नदी भक्तिसलिला ।।
तदा प्रत्यक्षं त्व सरसहृदयस्तन्मयतया ।
असीमश्रद्धावाननुभवसि मोदं ह्यनुपमम् ।।२८।।

अहो नैतच्चित्रं त्वरितरथसंचालनविधौ ।
शुभं नाम स्मृत्वानुभवति नवीनं बलमिव ॥
नभोयानं रूढ़ः खलु सलिलयानं स्थलरथं ।
जयः स्यादुद्घोषः स्फुरति किल वज्राङ्गवलिनः ॥२९॥

अनैषीः स्वं कालं सुखनिरभिलाषो विमलधीः ।
मनोरामस्योक्तं पदकमलभृंगायितमिव ॥
अवासुः स्वावासं सुकपिपतिसुग्रीवसुहृदः ।
प्रभोर्द्वारि सेवां विधिवदकरोः सेवकनिभः ॥ ३०॥

सशैलं धावन्तं गगनपथि तीव्रेण जवसा ।
विलोक्यैवं मन्ये किममरपतिर्वै कुलिशभृत् ॥
जिघांसुस्तं वृत्रं प्रहरति महाराक्षसपतिं ।
स्वयं स्कन्दं किंवा बलिनमसुरं तारकममुम् ॥३१॥

स्वयं कालं किंवा निशिचरपतिं रावणनृपम् ।
निगीर्णुं स्वां जिह्वां प्रलयसमये प्रक्षिपति वा ॥
हिडिम्बापुत्रो वा रणकुशलकर्णं प्रहरति
पुनर्वा मैनाकः खलु खगपतिस्तूत्पतति वा ॥३२॥

लघीयस्त्वं रूपं कृमिमशकतुल्यं वितनुषे
महीयस्त्वं रूपं यदुपतिसमं विस्मयकरम् ।
गरीयस्त्वं धर्तुं गिरिपतिनिभं वै प्रभवसि
यथाकामं रूपं कलयसि यथाकालमवनौ ॥३३॥

यदा लंकानाथो निशिचरपती रावणभटः
द्विजिह्वानां पाशैः सकलमनुबद्धं कपिदलम् ।
अकार्षीत् संत्रस्तं विगलितबलं चाथभवता
खगेशं स्वामीय त्वरितमपनीतं कपिभयम् ॥३४॥

सशोकां वैदेही वरगतिमशोकामगमयः
अशोकोद्यानाभां कुसुमफलहीनां विहितवान् ।
समायातान् सर्वानशनिसममुष्टिप्रहरणैः
समक्षं सर्वेषां सुभटमवधीरक्षयसुतम् ॥३५॥

विभर्षि त्वं भव्यां कनकरुचिवर्णां वरतनुं
दधे स्कन्धे शुद्धं धवलमुपवीतं ध्वजवरम् ।
असद्गर्वध्वंसं कुलिशमपि करे कुंचितकचान्
गदाहस्तस्त्रस्तं शमयसि समस्तं रिपुदलम् ॥३६॥

समुत्तीर्णाम्भोधिः क्षुधमपनिनीषुर्जनकजां
समूचे हे मातः ! ननु समनुजानीहि सपदि ।
अशोकोद्यानेऽस्मिन् मधुफलरसास्वादनविधि-
मनुज्ञातः सद्यः विततपृथुगात्रश्चलितवान् ॥३७॥

कपीशः सुग्रीवः विषकटुसमाज्ञां दिशति वै
विना सीतावृत्तं यदि प्रतिनिवृत्तं कपिदलम् ।
वधं प्राप्स्यत्वेवाधमकपिकलंको ह्यसकलः
तदा प्राणत्राता किल विदितसीताव्यतिकरः ॥३८॥

यदा नीतं सीता शुभकुशलवृत्तान्तमधुरं
प्रियं चूडारत्नं रघुपतिसमक्षं विनिहितम् ।
कृतज्ञेनोक्तोऽपि प्रियमिह विधेयं किमधुना
दयासिन्धोर्भक्तिं कमलचरणेष्वेव वृणुषे ॥३९॥

यदा लंकापाराद् वियति विहरन् त्वं ह्युपगतः
तदा भीतं त्रस्तं खलु समभवन् मर्कटदलम् ।
अहो किं मायावी कलुषहृदयः कोऽपि यवनः

मुमोदोपायाते त्वयि गतविमोहं कपिदलम् ॥४०॥

क्रुपादृष्ट्या वृष्ट्या प्रचुरमभिषिक्ता बहुजनाः
कथं नोच्छिद्यन्ते ननु मम वराकस्य विपदः ।
सवेगं हर्तव्यं यदपि किमपि स्याद्दुरितवत्
न कस्त्वां जानाति प्रथितयशसं संकटहरम् ।।४१।।

पिता माता चोभौ शिशुसुलभलीलाप्रमुदितौ
वधूट्यो ग्रामीणाः मुखकमलमालोक्य सरलाः ।
प्रहृष्टा वात्सल्याल्ललितललनालालनविधौ
स्वगेहे किं कर्तव्यं स्मृतिरिति च तासां व्यपगता ।।४२।।

शुभे चैत्रे मासे रविसमुदये मंगलदिने
कृतः शून्यावासः सुकृतिवरपित्रोः सुखमयः ।
रसायामोंकारस्तव मधुघृताभ्यां विलिखितः
प्रभोः शुद्धं नामोच्चरितमपि ते कर्णकुहरे ।।४३।।

शुभा आशीर्वादा अगणितजनानामधिगताः
मृदंगानां घोषैः क्षितिगगनमापूरितमिव ।
समाहूताः सर्वे सुपरिचितसम्बन्धिसुहृदः
तदा दत्तं तेभ्यो विविधफलमिष्टान्नमतुलम् ।।४४।।

सुवेद्यो यज्ञानां रुचिरकदलीनां किसलयैः
कुशास्तीर्णा रम्या विविधवरमालाविलसिताः ।
समस्तैः सानन्दं मुनिगणसुविप्रैर्गुरुवरैः
बृहद्यज्ञोऽपूर्वः श्रुतिमधुरमंत्रैः सुविहितः ।।४५।।

हनूमानित्येवं तव समभवन् नामकरणं
समुत्कृष्टं मानं पुरुषमहिलानामपि कृतम् ।
प्रदत्तं सद्दानं प्रचुरधनवस्त्रादिसहितम्
दरिद्रेभ्योऽर्थिभ्यः कृपणविकलेभ्यः सुमनसा ।।४६।।

हनूमन्तं वन्दे हृदयसदने यस्य सशरः
सचापः श्रीरामो वसति रघुनाथः शरणदः ।
तृणं मेने योऽसौ सकलवसुधाराज्यमपि च,
त्रिलोकीनाथस्याशरणशरणाच्चारुचरणात् ॥४७॥

तनोर्यष्टिर्दिव्या कनकरुचिसिन्दूरसुभगा ।
वृषस्कन्धे तावत् त्रिगुणमयसूत्रं विलसति ।
गदा हस्तेऽवामे कुलिशपरुषा दुष्टदमनी
विशालस्ते भालो वरशिरसि ते कुंचितकचाः ॥४८॥

प्रसादात्ते नूनं कलिकलुषमोहो विगलति
सुमेरुर्वाधानां तृणकण इवास्ते निमिषतः ।
समस्ताधिव्याधिर्व्रजति विलयं हुंकरणतः
कृपातः शोकाग्निर्मलयगिरिशैत्यं कलयति ॥४९॥

सुयोद्धा योद्धृणां विदित इह विज्ञेषु प्रवरः
सुमल्लो मल्लानां त्वरितवरगतीनां गतिवरः ।
प्रतिज्ञापालानां प्रथितयशसां सुप्रणवतां
महान् श्रेष्ठो भीष्मप्रभृतिरणवीरव्रतिवरः ॥५०॥

हनूमन्तं वन्दे पवनतनयं वज्रवपुषं
बुधानां मूर्धन्यं निशिचरकुलघ्नं कृतिवरम् ।
सुलंकातूलाग्निं गुणगणकषं वानरपतिम्
अनासक्तं भक्तं रघुकुलमणेः किंकरवरम् ॥५१॥

कृताम्भोधिप्लावं सुकपिपतिसुग्रीवसचिवम्
वरिष्ठं धीमन्तं त्वरितगतिमिष्टप्रदवरम् ।
नमामो धर्मिष्ठं पवनसमवेगं कपिवरं
शरण्यं त्रातारं ह्यभयवरदं गुणसदनम् ॥५२॥

कियत् सारल्यं ते नयविनयशीलत्वगरिमा
स्ववक्त्रेण स्वीयं बलमतिशयं नोद्गिरसि वै ।
यदा ते क्रोधाग्निः प्रसरति खलानां कुचरितै-
र्भयाक्रान्तोद्भ्रान्तः स्वयमपि कृतान्तः प्रणमति ॥५३॥

कुमारीकन्यायाः परमरमणीये वरतटे
धनुर्धारी पार्थः सुदृढवरसेतुं परिहसन् ।
शिलाखण्डैः सृष्टं रघुपतिमतिं शंसति न हि
सगर्वं च ब्रूते किमिति शरसेतुर्न रचितः ॥५४॥

त्वयोक्तं रे न त्वं रघुपतिमहत्त्वं गणयसि
बृहत्कायं दीर्घं कपिबलदलं मेरुसदृशम् ।
कथं भारं वोढुं शरशकलसेतुः प्रभवति
शिलासेतुः श्लाघ्यो मधुरभगवन्नामखचितः ॥५५॥

तदा पार्थः सार्थं शपथमकरोद् भीषणमिमम्
करिष्येऽहं वह्नौ निजतनुपरित्यागमधुना ।
यदि त्रुट्येत् सेतुः शरनिकरसृष्टो मम ननु
प्रभारात् संचारात् कपिकुलपतेः किंचिदपि ते ॥५६॥

प्रतिज्ञां तां श्रुत्वा त्वमपि शपथं शीघ्रमकरोः
भवेद् भग्नो भाराद् यदि सपदि सेतुर्नहि मम ।
अनन्यां तां त्यक्त्वा पदकमलसेवां रघुपते-
र्भजे ते दासत्वं भुवनविजयिन् शाश्वतमिति ॥५७॥

तदा पार्थः सद्योऽगणितशरपातेन कुशलः
ससर्जैकं सेतुं विशदसुदृढं विस्मयकरम् ।
तदा स्मृत्वा रामं त्वमपि सहसोत्प्लुत्य गिरितः
तडिद्वेगोऽधावीत् [illegible]सतीरभिमुखम् ॥५८॥

क्व ते शैलाकारा तनुरपि ससारा पविसमा
क्व चायं प्रक्षीणः कृशशरजसेतुस्तृणसमः ।
न चित्रं तद् यावत् किल पतसि सेतौ शरमये
असौ भग्नस्तावज्झटिति तरसा मृद्घट इव ।।५६।।

प्रदृश्यैतद् दृश्यं निजवचनवद्धोऽर्जुन इह
प्रवेष्टुं संजातः विरचितचितामुद्यत इव ।
तदा कृष्णो योगादवगतमुमूर्ष्वर्जुनविपत्
समायातो भक्तं कृतवटुकवेषोऽभिहितवान् ।।६०।।

महाभाग श्रीमन् किमिति तदभद्रं हि कृतवान्
यदाऽऽत्मानं वह्नौ क्षिपसि सहसा खिन्नमनसा ।
तदा चाद्योपान्तं निगदित उदन्तो मतिमता
त्वया सर्वः स्पष्टं सुविजयमहिम्ना सविनयम् ।।६१।।

भवद्भ्यां श्रीमद्भ्यां हि सकृदभिनेयं स्मयकरं
स्थिते साक्षीभूते मयि सकलकार्यं पुनरिदम् ।
यदा कृष्णेनोक्तं कुशलवचसा कूटनयतः
गृहीतः प्रस्तावो विशदहृदयेनापि भवता ।।६२।।

धृता सद्यः स्थूला किल भगवता कच्छपतनुः
पुनः पार्थेनाब्धौ शरनिकरसेतौ विरचिते ।
परित्राताः प्राणाः कथमपि तु भक्तस्य हरिणा
भवद्भारं सोढुं भुवि भगवदन्यो न सबलः ।।६३।।

पुरा तार्क्ष्यो जातो हरिवहनमत्तो जववशाद्
न मत्तः कोऽप्यास्ते दिवि भुवि जवीयांस्तनुधरः ।
गरुत्मन्तं कृष्णः मददमनहेतोः समादिशद्
हनूमन्तं सन्तं सपदि मम पार्श्वे कुरु पुरि ।।६४।।

समाधिस्थं ताक्ष्योंऽविनयवचसाऽऽह्वानिलसुतं
हनूमंस्त्वां कृष्णो निजभवनमाकारयति च।
अनाकर्ण्यास्योक्तिं किमपि नहि दत्तं प्रतिवचः
तदोच्चैः संघुष्टं पुनरपि भवत्कर्णकुहरे ॥६५॥
यदाहृस्तं स्वीयं चरणमपि सुप्तोत्थित इव
वितन्वन् लाङ्गूलं शिथिलगतिमास्फालयसि वै।
तदा पुच्छाघातप्रतिहततनुः सोऽपि सहसा
द्रुतं द्वारावत्यां पतति गरुडः कन्दुक इव ॥६६॥
उवाचेशं ताक्ष्यः खलु किमपराद्धं मम हरे!
प्रियोऽहं ते दासः सुखनिरभिलाषोऽपि दलितः।
तदा कृष्णेनोक्तं शृणु हि बलशालिन् खगपते!
मदोत्कर्षामर्षा प्रकृतिरिति मे सर्वविदिता ॥६७॥
इदानीं त्वं स्वस्थो विगतमदमोहो हृतभयः
उपेत्यामुं भक्तं विनययुतमाज्ञापय पुनः।
भवन्तं श्रीरामः समभिलषति द्रष्टुमधुना
समाश्वस्तश्चैवं खगपतिरयासीत् पुनरपि ॥६८॥
तदा हृष्टस्ताक्ष्यों मनसि धृतवान् साहसधृतिं
तवावासं प्राप्तः सविनयमुवाच प्रियगिरम्।
महाभाग श्रीमन् भुवनविदितौदार्यमहिमन्!
भवन्तं श्रीरामः समभिलषति द्रष्टुमधुना ॥६९॥
श्रुतश्रीरामाख्यः पुलकितशरीरस्त्वमभवः
सुसज्जः संजातो नगरमधिगन्तुं प्रमुदितः।
तदा स्पर्द्धा जाता प्रथममिति गत्वा हरिपुरी
त्वयि प्राक्सम्प्राप्तेऽन्वभवदतिलज्जां स गरुडः ॥७०॥

विलासात् सद्वाण्याः कृतकुशलवार्तापरिचयः
प्रणम्यं श्रीकृष्णं त्रिभुवनपतिं पीतवसनम् ।
उपास्यं श्रीरामं जनकतनयालक्ष्मणयुतं
दिदृक्षुर्नेत्राभ्यामभिलषसि तीव्रोत्सुकतया ॥७१॥

तदा कृष्णो रामः समजनि महायोगबलतः
दधौ सीतारूपं परमसुभगं राजमहिषी
समातस्थौ सद्योऽग्रजहलधरो लक्ष्मणतनुं
त्रिमूर्तिस्त्रेतायां नयनसुलभा द्वापरयुगे ॥७२॥

समस्तं सज्ज्ञानं खलु समुपलब्धं शिवकरं
कृतं वै सत्कार्यं भुवनविदितं शौर्यसहितम् ॥
अनन्या श्रीरामे त्रिभुवनपतौ भक्तिरचला
अपूर्वा व्यक्तित्वे प्रवहति तवैवं त्रिपथगा ॥७३॥

महद् वैचित्र्यं यद्धरिविमुखलंकापतिगृहे
जपन् रामं रामं मृदुलतनुपौत्रः समजनि ।
अनिष्टाशंकालुर्निजभवनजातं दशमुखो
निहन्तुं प्रारेभे ह्यदयहृदयो यावदसिना ॥७४॥

द्रुतं त्वं प्रच्छन्नः समधिगतलंको दशमुखं
स्वपुच्छेनाबद्धं क्षणमिव विसंज्ञं विहितवान् ।
ततस्त्यक्तं रामस्तुतिपरशिशुं वै समनयः
स्वमातुः संकाशे ह्यनुजमिव सौलोचनिमिमम् ॥७५॥

पुरा भीमेनोक्तं विनयसहितं भीष्मचरितं
धृतं रूपं लंकासमरभुवि संदर्शयतु माम् ।
प्रचण्डं तद्रूपं विपुलभयकरं संप्रकटितं
सकम्पः संत्रस्तश्चरणकमले तं प्रणतवान् ॥७६॥

तनोर्यष्टेर्नष्टिर्ज्वलनपवनाभ्यां न भवति
तथा शस्त्राघाता अपि गमयितुं नो क्षतिमलम् ।
प्रतिस्पर्द्धी जातो निखिलभुवने कोऽपि सुभटो
न सृष्टेरारम्भात् पुनरपि भविष्ये न भविता ॥७७॥

समुत्प्लावेनैव प्रखरतरवेगेन सहसा
बहिर्गन्तुं शक्तः विशदभुवनस्यापि ससुखम् ।
सुमेरोराकारं च निजतनुविस्तारगुणतः
समर्थस्तद्भारं पुनरपि गरिम्णातिशयितुम् ॥७८॥

प्रकामं भीमेन प्रथितवनभूमौ विहरता
सुखासीनो दृष्टः कृशतनुरिव त्वं गतवयाः ।
तथोक्तस्त्वं मत्वा स्वपिति कपिसाधारण इति
न पन्थान मह्यं कथमिति ददासि द्रुतमहो ॥७९॥

अशक्तो वार्द्धक्याच्चलितुमपि किंचिच्चरणतः
समाकृष्येषन्मां व्रज निजपथं तेन ससुखम् ।
समुल्लंघ्यापि त्वं शिथिलतनुर्यष्टि चल मम
न किञ्चिन्मात्रं स्यात्तव चलनचिन्ता मदुपरि ॥८०॥

गृहीत्वा लांगूलं स्वकरयुगलेनैव सबलं
समाकृष्टुं सद्यः किल प्रयतमानो न सफलः ।
अभूत् स्वेदाक्लिन्नः पवनतनयो मस्तकतले
तथा नम्रीभूतस्तव चरणपद्मेषु पतितः ॥८१॥

बलिष्ठं धर्मिष्ठं भवभयहरं त्वादृशसुतं
तपोनिष्ठं भक्तं रघुकुलमणेर्युद्धनिपुणम् ।
महात्मानं सन्तं सुकृतनिरतं नीतिकुशलं
अवाप्यैषा धन्या निखिलभुवने भारतधरा ॥८२॥

प्रभारात् ते नूनं सुविदितमहाभारतरणे
ययौ स्तोकं पश्चात् रिपुशरहतोऽप्यर्जुनरथः ।
सुदूरं पार्थास्त्रैः प्रचलति सुकर्णस्य तु रथः
प्रतापात् ते प्राप्तः समरविजयः पाण्डवसुतैः ।।८३।।

अहार्षीन् मायावी समरशिविरात् रावणसुहृत्
प्रसुप्तं सौमित्रं दशरथसुतं रामबलिनम् ।
बलीकर्तुं यावत् त्वभिलषति पातालसदने
यथाकाल कालीभवनबलिवेदीं प्रविशसि ।।८४।।

यदा हन्तुं दैत्यो दशरथसुतौ बद्धचरणौ
समाकृष्यैवासिं प्रचलति प्रहृष्टेन मनसा ।
तदाविर्भूतस्त्वं सकलमवधीः राक्षसकुलं
समानैषीः स्कन्धे प्रिययुगलमूर्ती स्वकटकम् ।।८५।।

अहो सच्चारित्र्यं यदपि रिपवो राक्षसदले
प्रशंसां कुर्वन्तः किल मुमुदिरे मत्तमनसः ।
स्नुषां लंकाधीशो मृतपतिशिरः प्राप्तुमदिशद्
हनूमच्छ्रीरामप्रभृतिवरसन्तो न भयदाः ।।८६।।

यदा लंकायुद्धेऽमरपतिजिता शक्तिनिहतः
विसंज्ञः सौमित्रो नयनयुगलोन्मेषरहितः ।
सुषेणाख्यं गत्वा भवनसहितं क्षिप्रमनयः
चिकित्सां शुश्रूषां समुचितमुपायं विहितवान् ।।८७।।

दिदृक्षुः श्रीरामं कवितुलसिदासः समगमत्
सचित्रं कूटाख्यं प्रकृतिरमणीयं स्थलवरम् ।
वरे घाटेऽघर्षत् सुकवितुलसीचन्दनमसौ
करोति श्रीरामस्तिलकमिति लोकोक्तिरवनौ ।।८८।।

अहो निर्भीकत्वं निशिचरपतेः संसदि पुरा
प्रदेया श्रीसीता रघुवरमहीपाय समये ।
तवैश्वर्यं नोचेत् ननु रघुपतिर्धूलिकणसात्
विधास्यत्येवोक्तं विगतभयलेशेन भवता ॥८९॥

नभोमार्गे गच्छन् भरतशरविद्धोऽवधपुरि
ब्रुवन् रामं रामं धरणितलमागत्य भरतम् ।
समाचारं लंकारणविषयमाश्राव्य सहसा
प्रतस्थे वै शीघ्रं द्विगुणितजवो रामशिविरम् ॥९०॥

पुरा मार्गे दृष्ट्वा कपटमुनिसृष्टं वरसरः
पिपासुः श्रान्तस्त्वं श्रममपनिनीषुर्विरमसि ।
गुणग्रामं रामं मुहुरपि जपन्तं मुनिवरं
पुनर्वैशंसन्तं विषमसमरे रामविजयम् ॥९१॥

मुनेर्निर्देशात् त्वं प्रविशसि सरो मज्जनकृते
गृहीत्वा तत्कालं तव चरणमुद्विग्नमकरी ।
हता चैषा दिव्यां वरतनुमवस्थाय गगनं
गता ते निष्पापा किल समभवद्दर्शनवशात् ॥९२॥

मुनिर्नायं घोरोऽधमनिशिचरः सत्यवचनं
वदन्ती सा यावद् दिवमुपगता दिव्यवनिता ।
समायातस्तावत् त्वमपि सविधे छद्मयतिनः
प्रसादं ते दास्ये समुचितमगादीरिति तदा ॥९३॥

स लाङ्गूलाबद्धो यमसदनमापच्छलमुनिः
ब्रुवन् रामं रामं शुभगतिमयासीत् क्षणमिव ।
त्वया हर्षाद् यात्रा हिमगिरिसमक्षं किल कृता
तथोत्खातं द्रोणाचलसुशिखरं चौषधमयम् ॥९४॥

महाश्चर्यं नूनं विशदजलधिं योजनशतम्
समुत्तीर्णस्तूर्णं विविधभयपूर्णं प्रणवशात् ।
प्रपूज्योत्तिष्ठन्तं विनयवशमैनाकशिखरं
निर्हंसि स्म च्छाया-ग्रहणपरिदक्षां निशिचरीम् ॥९५॥

अहो सेवाभावः रिपुशरहतानां रणकृताम् ।
विशल्याख्यौषध्या कपिदलभटानां व्रणवताम् ।
अपूर्वां शुश्रूषां विविधविधिभिस्तर्हि कृतवान्
चिकित्सां कृत्वा तान् विगतबहुपीडां विहितवान् ॥९६॥

यदासीद् रामस्योदधितटशिवस्थापनमतिः
तदाऽऽनेतुं काश्या: रुचिरशिवलिंगं हि प्रहितः ।
विलम्बे संजाते निजतनुपरित्यागधिषणः
सप्रेमश्रीरामादमृतमुपदेशं त्वलभथाः ॥९७॥

रणे मुष्टीमुष्टौ भवति नव तुष्टिः समधिका
तथा हस्ताहस्तौ भवति न परास्तः सपदि कः ।
पुनः केशाकेशौ प्रबललवलेशो न भवति
न कस्यापि द्वन्द्वे किमपि बलिनः साहसमभूत् ॥९८॥

त्वया सीताऽऽनीताऽनिलसुत ! यदा रावणहृता
कृतज्ञो रामोऽभूत् कपिदलसमक्षं कथितवान् ।
हितैषी त्वत्तुल्यो नहि मम मनुष्यो न च मुनि-
र्न देवो गन्धर्वो विबुध उत यक्षोऽपि तनुभृत् ॥९९॥

मनस्वी तेजस्वी जगति नहि जातस्त्वमिव हि
सपत्ना दुर्धर्षा युधि नहि जिताः केवलमिह ।
[illegible] सर्वं निभृतमपि सु कामाद्यरिदलम्
अतः श्रद्धापूर्वं प्रणतिततयस्ते चरणयोः ॥१००॥

सुजिज्ञासा पूर्णा सनकप्रभृतीनां मतिमतां
कृता विस्तारेणातिशयगहना तत्वविषया ।
त्वयातो व्याख्यातः सरसविधिना गेयमहिमा
स मन्त्रो रामाख्यो जगतिपरमानन्दनिलयः ॥१०१॥

विनयावनतः
**वीरेन्द्रदत्त तिवारी**
एम० ए० (सं०, हि०, अं) एल० टी०
प्राचार्य केन्द्रीय विद्यालय
फतेहगढ़